संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

# अजन्ते स्त्रीलिङ्गाः

| आ | इ | ई | उ | ऊ | ऋ | ओ | ऐ | औ |
|---|---|---|---|---|---|---|---|---|
| १.रमा | १.मति | १.गौरी | १.धेनु | १.भ्रू | १.स्वसृ | १.द्यो | १.रै | १.नौ |
| २.सर्वा | २.त्रि | २.स्त्री | २.क्रोष्टु | २. स्वयंभू | २.मातृ | | | |
| ३.जरा | ३.द्वि | ३.श्री | | | | | | |
| ४.गोपा | | | | | | | | |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आकारान्तेषु 'रमा'शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

- रमा।
- सूत्रम्- **औङ आपः॥ (७,१.१८)**
- सूत्रार्थः- आबन्तादङ्गात्परस्ययौङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा। रमे। रमाः॥
- सूत्रम्- **सम्बुद्धौ च॥ (७,३.१०६)**
- सूत्रार्थः- आप एकारः स्यात्सम्बुद्धौ। एङ्ह्रस्वादिति संबुद्धिलोपः। हे रमे। हे रमे। हे रमाः। रमाम्। रमे। रमाः॥
- सूत्रम्- **आङि चापः॥ (७,३.१०५)**
- सूत्रार्थः- आङि ओसि चाप एकारः। रमया। रमाभ्याम्। रमाभिः॥
- सूत्रम्- **याडापः॥ ७,३.११३)**
- सूत्रार्थः- आपो ङितो याट्। वृद्धिः। रमायै। रमाभ्याम्-२। रमाभ्यः-२। रमायाः-२। रमयोः-२। रमाणाम्। रमायाम्। रमासु। एवं दुर्गाम्बिकादयः॥

| | |
|---|---|
| रमा (प्रातिपदिकसञ्ज्ञा)<br>रमा + स् (हल्ङ्याभ्यो..)<br>**रमा** | रमा + औ (औङ आपः)<br>रमा + ई<br>**रमे** |
| रमा + अस् (अकः सवर्णे...)<br>रमास्<br>**रमाः** | हे रमा + स् (सम्बुद्धौ च)<br>हे रमे + स् (एङ्ह्रस्वात्..)<br>**हे रमे** |
| रमा + आ (आङि चापः)<br>रमे + आ (अयादेशः)<br>**रमया** | रमा + ए (याडापः)<br>रमा + या ए (वृद्धिः)<br>रमा + यै = **रमायै** |
| रमा + (ङसिँ) अस्(याडापः)<br>रमा + या अस्(सवर्णदीर्घः)<br>**रमायाः** | रमा + ओस् (आङि चापः)<br>रमे + ओस् (अयादेशः)<br>**रमयोः** |
| रमा + आम् (ह्रस्वनद्यापो नुँट्)<br>रमा + नाम् (अट्कुप्वा....)<br>**रमाणाम्** | रमा + इ (ङेराम्नद्याम्...)<br>रमा + या आम्<br>**रमायाम्** |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ‘रमा’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | रमा | रमे | रमाः |
| सम्बोधनम् | हे रमे | हे रमे | हे रमाः |
| द्वितीया | रमाम् | रमे | रमाः |
| तृतीया | रमया | रमाभ्याम् | रमाभिः |
| चतुर्थी | रमायै | रमाभ्याम् | रमाभ्यः |
| पञ्चमी | रमायाः | रमाभ्याम् | रमाभ्यः |
| षष्ठी | रमायाः | रमयोः | रमाणाम् |
| सप्तमी | रमायाम् | रमयोः | रमासु |

- औङ आपः-- शी
- आपः एकारः
- याडापः-- याट्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ‘सर्वा’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सर्वा | सर्वे | सर्वाः |
| सम्बोधनम् | हे सर्वे | हे सर्वे | हे सर्वाः |
| द्वितीया | सर्वाम् | सर्वे | सर्वाः |
| तृतीया | सर्वया | सर्वाभ्याम् | सर्वाभिः |
| चतुर्थी | सर्वस्यै | सर्वाभ्याम् | सर्वाभ्यः |
| पञ्चमी | सर्वस्याः | सर्वाभ्याम् | सर्वाभ्यः |
| षष्ठी | सर्वस्याः | सर्वयोः | सर्वासाम् |
| सप्तमी | सर्वस्याम् | सर्वयोः | सर्वासु |

❖ सूत्रम्- सर्वनाम्नः स्याड्ढ्रस्वश्च॥

❖ सूत्रार्थः- आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः। सर्वस्यै। सर्वस्याः। सर्वासाम्। सर्वस्याम्। शेषं रमावत्॥ एवं विश्वादय आबन्ताः॥

सर्वा + ए
सर्व + स्या ए
सर्व + स्यै
सर्वस्यै

सर्वा + ङि
सर्व + स्या आम्
सर्व + स्याम्
सर्वस्याम्

❖ औङ आपः-- शी
❖ आपः एकारः
❖ सर्वनाम्नः स्याड्ढ्रस्वश्च-- स्याट्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ‘उत्तरपूर्वा’शब्दस्य रुपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | उत्तरपूर्वा | उत्तरपूर्वे | उत्तरपूर्वाः |
| सम्बोधनम् | हे उत्तरपूर्वे | हे उत्तरपूर्वे | हे उत्तरपूर्वाः |
| द्वितीया | उत्तरपूर्वाम् | उत्तरपूर्वे | उत्तरपूर्वाः |
| तृतीया | उत्तरपूर्वया | उत्तरपूर्वाभ्याम् | उत्तरपूर्वाभिः |
| चतुर्थी | उत्तरपूर्वस्यै , उत्तरपूर्वायै | उत्तरपूर्वाभ्याम् | उत्तरपूर्वाभ्यः |
| पञ्चमी | उत्तरपूर्वस्याः , उत्तरपूर्वायाः | उत्तरपूर्वाभ्याम् | उत्तरपूर्वाभ्यः |
| षष्ठी | उत्तरपूर्वस्याः , उत्तरपूर्वायाः | उत्तरपूर्वयोः | उत्तरपूर्वासाम्, उत्तरपूर्वाणाम् |
| सप्तमी | उत्तरपूर्वस्याम् , उत्तरपूर्वायाम् | उत्तरपूर्वयोः | उत्तरपूर्वासु |

- सूत्रम्- विभाषा दिक्समासे बहुव्रीहौ॥
- सूत्रार्थः- सर्वनामता वा। उत्तरपूर्वस्यै, उत्तरपूर्वायै।
- तीयस्येति (ङित्सु) वा सर्वनामसंज्ञा।
- द्वितीयस्यै, द्वितीयायै॥ एवं तृतीया॥

- औङ आपः-- शी
- आपः एकारः
- स्याट्- याट्
- सुँट्- नुँट्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आकारान्तेषु ‘अम्बा’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अम्बा | अम्बे | अम्बाः |
| सम्बोधनम् | हे अम्ब | हे अम्बे | हे अम्बाः |
| द्वितीया | अम्बाम् | अम्बे | अम्बाः |
| तृतीया | अम्बया | अम्बाभ्याम् | अम्बाभिः |
| चतुर्थी | अम्बायै | अम्बाभ्याम् | अम्बाभ्यः |
| पञ्चमी | अम्बायाः | अम्बाभ्याम् | अम्बाभ्यः |
| षष्ठी | अम्बायाः | अम्बयोः | अम्बानाम् |
| सप्तमी | अम्बायाम् | अम्बयोः | अम्बासु |

- अम्बार्थेति ह्रस्वः।
- हे अम्ब। हे अक्क। हे अल्ल॥

- औङ आपः— शी
- अम्बार्थनद्योर्ह्रस्वः
- आपः एकारः
- याडापः-- याट्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आकारान्तेषु ‘जरा’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | जरा | जरसौ , जरे | जरसः, जराः |
| सम्बोधनम् | हे जरे | हे जरसौ , जरे | हे जरसः, जराः |
| द्वितीया | जरसम् , जराम् | जरसौ , जरे | जरसः , जराः |
| तृतीया | जरसा ,जरया | जराभ्याम् | जराभिः |
| चतुर्थी | जरसे ,जरायै | जराभ्याम् | जराभ्यः |
| पञ्चमी | जरसः ,जरायाः | जराभ्याम् | जराभ्यः |
| षष्ठी | जरसः ,जरायाः | जरसोः ,जरयोः | जरसाम् ,जराणाम् |
| सप्तमी | जरसि ,जरायाम् | जरसोः ,जरयोः | जरासु |

- जरा। जरसौ इत्यादि। पक्षे रमावत्॥
- गोपाः, विश्वपावत्॥

- औङ आपः– शी
- अम्बार्थनद्योर्ह्रस्वः
- आपः एकारः
- याडापः– याट्
- जरसादेशः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु 'मति'शब्दस्य रूपाणि

## लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | मतिः | मती | मतयः |
| सम्बोधनम् | हे मते | हे मती | हे मतयः |
| द्वितीया | मतिम् | मती | मतीः |
| तृतीया | मत्या | मतिभ्याम् | मतिभिः |
| चतुर्थी | मत्यै ,मतये | मतिभ्याम् | मतिभ्यः |
| पञ्चमी | मत्याः ,मतेः | मतिभ्याम् | मतिभ्यः |
| षष्ठी | मत्याः ,मतेः | मत्योः | मतीनाम् |
| सप्तमी | मत्याम् ,मतौ | मत्योः | मतिषु |

❖ (स्त्रीत्वान्न नत्वम्-) मतीः (मतिः) । मत्या ॥

| | |
|---|---|
| मति + ए<br>मति + आ ए<br>मति + ऐ<br>मत्यै | मति + ए<br>मते + ए<br>मत् अय् + ए<br>मतये |

| | |
|---|---|
| मति + अस्<br>मति + आ अस्<br>मति + आस्<br>मत्याः | मति + अस्<br>मते + अस्<br>मतेस्<br>मतेः |

❖ प्रथमयोः पूर्वसवर्णः
❖ ह्रस्वस्य गुणः
❖ ङिति ह्रस्वश्च— नदीसंज्ञा-विकल्पः
❖ घिसंज्ञापक्षे रूपम्

# इकारान्तेषु 'मति'शब्दस्य प्रक्रिया



- सूत्रम्- ङिति ह्रस्वश्च॥ (१,४.६)
- सूत्रार्थः- इयँङुवँङ्स्थानौ= इयङुवङ्प्राप्तियोग्यौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ (वा नदीसंज्ञौ स्तो ङिति परे) (यथा- श्री-भ्रू- इत्यादयः),।
- ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति (परे ) (यथा- मति-धेनु- इत्यादयः),। ।मत्यै, मतये। मत्याः २। मतेः २॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# घि-सञ्ज्ञाप्रयुक्तकार्याणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | | | |
| सम्बोधनम् | | | |
| द्वितीया | | | |
| तृतीया | आङो नाऽस्त्रियाम्<br>टा– ना (स्त्रीलिङ्गं विहाय) | | |
| चतुर्थी | घेर्ङिति<br>घिसंज्ञकस्य गुणः | | |
| पञ्चमी | घेर्ङिति<br>घिसंज्ञकस्य गुणः | | |
| षष्ठी | घेर्ङिति<br>घिसंज्ञकस्य गुणः | | |
| सप्तमी | अच्च घेः<br>घिसंज्ञकस्य अकारः ङेरौत् | | |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु 'त्रि'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | बहुवचनम् |
|---|---|
| प्रथमा | तिस्रः |
| द्वितीया | तिस्रः |
| तृतीया | तिसृभिः |
| चतुर्थी | तिसृभ्यः |
| पञ्चमी | तिसृभ्यः |
| षष्ठी | तिसृणाम् |
| सप्तमी | तिसृषु |

- ❖ सूत्रम्- त्रिचतुरोः स्त्रियां तिसृचतसृ॥ (७,२.९९)
- ❖ सूत्रार्थः- (त्रि-चतुर्-शब्दयोः) स्त्रीलिङ्गयोरेतौ= क्रमशः तिसृ-चतसृ स्तो विभक्तौ॥
- ❖ सूत्रम्- अचि र ऋतः॥ (७,२.१००)
- ❖ सूत्रार्थः- तिसृ चतसृ एतयोरृकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामपवादः। तिस्रः-२। तिसृभिः। तिसृभ्यः। तिसृभ्यः। आमि नुँट्॥
- ❖ सूत्रम्- न तिसृचतसृ॥ (६,४.४)
- ❖ सूत्रार्थः- एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु॥
- ❖ द्वे। द्वे। द्वाभ्याम्। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः॥

त्रि + अस् (त्रिचतुरोः स्त्रियां तिसृचतसृ)
तिसृ + अस् (*यण्>पूर्वसवर्ण>जसि च>*)
तिस् र् + अस् (अचि र ऋतः)
**तिस्रः**

त्रि + आम् (*त्रेस्त्रयः>*
त्रिचतुरोः स्त्रियां तिसृचतसृ)
तिसृ + आम् (*ह्रस्वनद्यापो नुँट्-७.१.५४*)
(*अचि र ऋतः-७,२.१००*)
(नुमचिरतृज्वद्भावेभ्यो नुँट् पूर्वविप्रतिषेधेन)
तिसृ + न् आम् (न तिसृचतसृ)
**तिसृणाम्** (ऋवर्णान्नस्य णत्वं वाच्यम्)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु 'गौरी'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | गौरी | गौर्यौ/गौर्य्यौ | गौर्यः/गौर्य्यः |
| सम्बोधनम् | हे गौरि | हे गौर्यौ/गौर्य्यौ | हे गौर्यः/गौर्य्यः |
| द्वितीया | गौरीम् | गौर्यौ/गौर्य्यौ | गौरीः |
| तृतीया | गौर्या/गौर्य्या | गौरीभ्याम् | गौरीभिः |
| चतुर्थी | गौरी+ आ ए<br>गौरी+ ऐ = गौर्यै/गौर्य्यै | गौरीभ्याम् | गौरीभ्यः |
| पञ्चमी | गौरी+ आ अस्<br>गौरी+ आस् = गौर्याः/गौर्य्याः | गौरीभ्याम् | गौरीभ्यः |
| षष्ठी | गौरी+ आ अस्<br>गौरी+ आस् = गौर्याः/गौर्य्याः | गौर्योः/गौर्य्योः | गौरीणाम् |
| सप्तमी | गौरी+ आ आम् (इ)<br>गौरी+ आम् = गौर्याम्/गौर्य्याम् | गौर्योः/गौर्य्योः | गौरीषु |

- गौरी। गौर्य्यौ। गौर्य्यः।
  हे गौरि। गौर्य्यै इत्यादि।
- एवं नद्यादयः॥

- इको यणचि- यण्
- अम्बार्थनद्योर्ह्रस्वः- ह्रस्वः
- अमि पूर्वः- पूर्वरूपम्
- प्रथमयोः पूर्वसवर्णः- दीर्घः
- यू स्त्र्याख्यौ नदी- नदीकार्यम्,यणादिश्च

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु 'लक्ष्मी'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | लक्ष्मीः | लक्ष्म्यौ | लक्ष्म्यः |
| सम्बोधनम् | हे लक्ष्मि | हे लक्ष्म्यौ | हे लक्ष्म्यः |
| द्वितीया | लक्ष्मीम् | लक्ष्म्यौ | लक्ष्मीः |
| तृतीया | लक्ष्म्या | लक्ष्मीभ्याम् | लक्ष्मीभिः |
| चतुर्थी | लक्ष्म्यै | लक्ष्मीभ्याम् | लक्ष्मीभ्यः |
| पञ्चमी | लक्ष्म्याः | लक्ष्मीभ्याम् | लक्ष्मीभ्यः |
| षष्ठी | लक्ष्म्याः | लक्ष्म्योः | लक्ष्मीणाम् |
| सप्तमी | लक्ष्म्याम् | लक्ष्म्योः | लक्ष्मीषु |

- लक्ष्मीः। शेषं गौरीवत्॥
- एवं तरीतन्त्र्यादयः॥

- अङ्यन्तत्वात् सुलोपो न
- इको यणचि- यण्
- अम्बार्थनद्योर्ह्रस्वः- ह्रस्वः
- अमि पूर्वः- पूर्वरूपम्
- प्रथमयोः पूर्वसवर्णः- दीर्घः
- यू स्त्र्याख्यौ नदी- नदीकार्यम्,यणादिश्च

# सुँलोपः कुत्र न भवति



- अवी-तन्त्री-तरी-लक्ष्मी-ह्री-धी-श्रीणामुणादिषु।
  सप्तानामपि शब्दानां सुलोपो न कदाचन॥
- अवी-तन्त्री-स्तरी-लक्ष्मी-तरी-ह्री-धी-श्रियां भियः।
  अङ्यन्तत्वात् स्त्रियामेषां सुलोपो न कदाचन॥
- अवी-लक्ष्मी-तरी-तन्त्री-तन्द्री-धी-ह्री-श्रियां पुरः।
  भीशब्दाच्च सोर्लोपः न स्त्रीलिङ्गे स्यात् कदाचन॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु ‘स्त्री’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | स्त्री | स्त्री+ औ<br>स्त्र् इय्+ औ = स्त्रियौ | स्त्रियः |
| सम्बोधनम् | हे स्त्रि | हे स्त्रियौ | हे स्त्रियः |
| द्वितीया | स्त्रियम्, स्त्रीम् | स्त्रियौ | स्त्रियः,स्त्रीः |
| तृतीया | स्त्रिया | स्त्रीभ्याम् | स्त्रीभिः |
| चतुर्थी | स्त्री+ आ ए<br>स्त्रिय्+ ऐ = स्त्रियै | स्त्रीभ्याम् | स्त्रीभ्यः |
| पञ्चमी | स्त्री+ आ अस्<br>स्त्रिय्+ आस् = स्त्रियाः | स्त्रीभ्याम् | स्त्रीभ्यः |
| षष्ठी | स्त्री+ आ अस्<br>स्त्रिय्+ आस् = स्त्रियाः | स्त्रियोः | स्त्रीणाम् |
| सप्तमी | स्त्री+ आ आम् (इ)<br>स्त्रिय्+ आम् = स्त्रियाम् | स्त्रियोः | स्त्रीषु |

- सूत्रम्- स्त्रियाः॥ (६,४.७९))
- सूत्रार्थः- अस्येयँङ् स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः॥
- सूत्रम्- वाम्शसोः॥ (६,४.८०)
- सूत्रार्थः- अमि शसि च स्त्रिया इयँङ् वा स्यात्। स्त्रियम्, स्त्रीम्। स्त्रियः, स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः। परत्वान्नुँट्। स्त्रीणाम्। स्त्रीषु॥

- स्त्रियाः- इयङ्
- वाम्शसोः- वा इयँङ्
- अम्बार्थनद्योर्ह्रस्वः- ह्रस्वः
- नदीकार्यम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु ‘श्री’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | श्रीः | श्री+ औ<br>श् इय्+ औ = श्रियौ | श्रियः |
| सम्बोधनम् | हे श्रीः | हे श्रियौ | हे श्रियः |
| द्वितीया | श्रियम् | श्रियौ | श्रियः |
| तृतीया | श्रिया | श्रीभ्याम् | श्रीभिः |
| चतुर्थी | श्री+ आ ए<br>श्रिय्+ ऐ = श्रियै , श्रिये | श्रीभ्याम् | श्रीभ्यः |
| पञ्चमी | श्री+ आ अस्<br>श्रिय्+ आस् = श्रियाः, श्रियः | श्रीभ्याम् | श्रीभ्यः |
| षष्ठी | श्री+ आ अस्<br>श्रिय्+ आस् = श्रियाः , श्रियः | श्रियोः | श्रीणाम्<br>श्रियाम् |
| सप्तमी | श्री+ आ आम् (ङ)<br>श्रिय्+ आम् = श्रियाम्, श्रियि | श्रियोः | श्रीषु |

- श्रीः। श्रियौ। श्रियः॥
- सूत्रम्- नेयँङुवँङ्स्थानावस्त्री॥ (१,४.४)
- सूत्रार्थः- इयँङुवँङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः, न तु स्त्री। हे श्रीः। श्रियै, श्रिये। श्रियाः-२, श्रियः-२॥
- सूत्रम्- वाऽऽमि॥ (१,४.५)
- सूत्रार्थः- इयँङुवँङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः, न तु स्त्री। श्रीणाम्, श्रियाम्। श्रियि, श्रियाम्॥

- अचिश्नु.....-- इयङ्
- ङिति ह्रस्वश्च, वामि-- वा नदीसंज्ञा

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उकारान्तेषु 'धेनु'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | धेनुः | धेनू | धेनवः |
| सम्बोधनम् | हे धेनो | हे धेनू | हे धेनवः |
| द्वितीया | धेनुम् | धेनू | धेनूः |
| तृतीया | धेन्वा | धेनुभ्याम् | धेनुभिः |
| चतुर्थी | धेन्वै ,धेनवे | धेनुभ्याम् | धेनुभ्यः |
| पञ्चमी | धेन्वाः ,धेनोः | धेनुभ्याम् | धेनुभ्यः |
| षष्ठी | धेन्वाः ,धेनोः | धेन्वोः | धेनूनाम् |
| सप्तमी | धेन्वाम् ,धेनौ | धेन्वोः | धेनुषु |

❖ धेनुर्मतिवत्॥

| | |
|---|---|
| धेनु + ए | धेनु + ए |
| धेनु + आ ए | धेनो + ए |
| धेन् व् + ऐ | धेन् अव् + ए |
| धेन्वै | धेनवे |

| | |
|---|---|
| धेनु + अस् | धेनु + अस् |
| धेनु + आ अस् | धेनो + अस् |
| धेन् व् + आस् | धेनोस् |
| धेन्वाः | धेनोः |

❖ प्रथमयोः पूर्वसवर्णः
❖ ह्रस्वस्य गुणः- गुणः
❖ जसि च- गुणः
❖ ङिति ह्रस्वश्च– नदीसंज्ञा-विकल्पः, घिसंज्ञापक्षे रूपम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उकारान्तेषु 'क्रोष्टु'शब्दस्य रुपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | क्रोष्ट्री | क्रोष्ट्र्यौ | क्रोष्ट्र्यः |
| सम्बोधनम् | हे क्रोष्ट्रि | हे क्रोष्ट्र्यौ | हे क्रोष्ट्र्यः |
| द्वितीया | क्रोष्ट्रीम् | क्रोष्ट्र्यौ | क्रोष्ट्रीः |
| तृतीया | क्रोष्ट्र्या | क्रोष्ट्रीभ्याम् | क्रोष्ट्रीभिः |
| चतुर्थी | क्रोष्ट्री+ आ ए<br>क्रोष्ट्री+ ऐ = क्रोष्ट्र्यै | क्रोष्ट्रीभ्याम् | क्रोष्ट्रीभ्यः |
| पञ्चमी | क्रोष्ट्री+ आ अस्<br>क्रोष्ट्री+ आस् = क्रोष्ट्र्याः | क्रोष्ट्रीभ्याम् | क्रोष्ट्रीभ्यः |
| षष्ठी | क्रोष्ट्री+ आ अस्<br>क्रोष्ट्री+ आस् = क्रोष्ट्र्याः | क्रोष्ट्र्योः | क्रोष्ट्रीणाम् |
| सप्तमी | क्रोष्ट्री+ आ आम् (इ)<br>क्रोष्ट्री+ आम् = क्रोष्ट्र्याम् | क्रोष्ट्र्योः | क्रोष्ट्रीषु |

- सूत्रम्- स्त्रियां च॥ (७,१.९६)
- सूत्रार्थः- स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते॥
- सूत्रम्- ऋन्नेभ्यो ङीप्॥ (४,१.५)
- सूत्रार्थः- ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्। क्रोष्ट्री गौरीवत्॥

क्रोष्टु
क्रोष्टृ+ ङीप्
क्रोष्टृ+ ई
क्रोष्ट् र्+ ई
क्रोष्ट्री+ स्
क्रोष्ट्री

- इको यणचि- यण्
- अम्बार्थनद्योर्ह्रस्वः- ह्रस्वः
- अमि पूर्वः- पूर्वरुपम्
- प्रथमयोः पूर्वसवर्णः- दीर्घः
- यू स्त्र्याख्यौ नदी- नदीकार्यम्,यणादिश्च

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऊकारान्तेषु ‘भ्रू’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | भ्रूः | भ्रू+ औ<br>भ्र् उव्+ औ = भ्रुवौ | भ्रुवः |
| सम्बोधनम् | हे भ्रूः | हे भ्रुवौ | हे भ्रुवः |
| द्वितीया | भ्रुवम् | भ्रुवौ | भ्रुवः |
| तृतीया | भ्रुवा | भ्रूभ्याम् | भ्रूभिः |
| चतुर्थी | भ्रू+ आ ए<br>भ्र् उव्+ ऐ = भ्रुवै , भ्रुवे | भ्रूभ्याम् | भ्रूभ्यः |
| पञ्चमी | भ्रू+ आ अस्<br>भ्र् उव्+ आस् = भ्रुवाः, भ्रुवः | भ्रूभ्याम् | भ्रूभ्यः |
| षष्ठी | भ्रू+ आ अस्<br>भ्र् उव्+ आस् = भ्रुवाः, भ्रुवः | भ्रुवोः | भ्रूणाम्<br>भ्रुवाम् |
| सप्तमी | भ्रू+ आ आम् (ङ)<br>भ्र् उव्+ आम् = भ्रुवाम्, भ्रुवि | भ्रुवोः | भ्रूषु |

❖भ्रूः श्रीवत्॥

- ❖ सूत्रम्- नेयँङुवँङ्स्थानावस्त्री॥ (१,४.४)
- ❖ सूत्रार्थः- इयँङुवँङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः, न तु स्त्री।
- ❖ सूत्रम्- वाऽऽमि॥ (१,४.५)
- ❖ सूत्रार्थः- इयँङुवँङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः, न तु स्त्री।
- ❖ सूत्रम्- ङिति ह्रस्वश्च॥ (१,४.६)
- ❖ सूत्रार्थः- इयँङुवँङ्स्थानौ= इयङुवङ्प्राप्तियोग्यौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ (वा नदीसंज्ञौ स्तो ङिति परे) (यथा- श्री-भ्रू- इत्यादयः),।
- ❖ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति (परे ) (यथा- मति- धेनु- इत्यादयः),।। मत्यै, मतये। मत्याः २। मतेः २॥

- ❖ अचिश्नु.....-- उवँङ्
- ❖ ङिति ह्रस्वश्च, वामि-- वा नदीसंज्ञा

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऊकारान्तेषु ‘स्वयम्भू’शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | स्वयम्भूः | स्वयम्भू+ औ<br>स्वयम्भ् उव्+ औ = स्वयम्भूवौ | स्वभू+ अस्<br>स्वभ् उव्+ अस् =स्वयम्भुवः |
| सम्बोधनम् | हे स्वयम्भूः | हे स्वयम्भुवौ | हे स्वयम्भुवः |
| द्वितीया | स्वयम्भुवम् | स्वयम्भुवौ | स्वयम्भुवः |
| तृतीया | स्वयम्भुवा | स्वयम्भूभ्याम् | स्वयम्भूभिः |
| चतुर्थी | स्वयम्भुवे | स्वयम्भूभ्याम् | स्वयम्भूभ्यः |
| पञ्चमी | स्वयम्भुवः | स्वयम्भूभ्याम् | स्वयम्भूभ्यः |
| षष्ठी | स्वयम्भुवः | स्वयम्भुवोः | स्वयम्भुवाम् |
| सप्तमी | स्वयम्भुवि | स्वयम्भुवोः | स्वयम्भूषु |

- ❖ स्वयम्भूः पुंवत्॥

( अत्र इत्थं बाध्य-बाधकभावः )

- ❖ इको यणचि- यण्
- ❖ प्रथमयोः पूर्वसवर्णः- दीर्घः
- ❖ दीर्घाज्जसि च- दीर्घनिषेधः
- ❖ पुनः यण् प्राप्तिः
- ❖ अचिश्नु.....- उवँङादेशः
- ❖ ओः सुपि....- यणादेशः
- ❖ न भूसुधियोः- यण्निषेधः
- ❖ पुनः उवँङ्

❖ उवँङ्-कार्यम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऋकारान्तेषु ‘स्वसृ’शब्दस्य रूपाणि

## लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | स्वसा | स्वसारौ | स्वसारः |
| सम्बोधनम् | हे स्वसः | हे स्वसारौ | हे स्वसारः |
| द्वितीया | स्वसारम् | स्वसारौ | स्वसॄः |
| तृतीया | स्वस्रा | स्वसृभ्याम् | स्वसृभिः |
| चतुर्थी | स्वस्रे | स्वसृभ्याम् | स्वसृभ्यः |
| पञ्चमी | स्वस्रुः | स्वसृभ्याम् | स्वसृभ्यः |
| षष्ठी | स्वस्रुः | स्वस्रोः | स्वसॄणाम् |
| सप्तमी | स्वसरि | स्वस्रोः | स्वसृषु |

- सूत्रम्- न षट्स्वस्रादिभ्यः॥
- सूत्रार्थः- ङीप्टापौ न स्तः॥
- स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।
  याता मातेति सप्तैते स्वस्रादय उदाहृताः॥
- स्वसा। स्वसारौ॥

- अनङ्-उपधादीर्घादिकार्यम्
- ऋतो ङिसर्वनाम....- गुणः
- ह्रस्वस्य गुणः- गुणः
- प्रथमयोः पूर्वसवर्णः -पूर्वसवर्णःदीर्घः
- इको यणचि– यण्
- ऋत उत्,रात्सस्य

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऋकारान्तेषु 'मातृ'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | माता | मातरौ | मातरः |
| सम्बोधनम् | हे मातः | हे मातरौ | हे मातरः |
| द्वितीया | मातरम् | मातरौ | मातॄः |
| तृतीया | मात्रा | मातृभ्याम् | मातृभिः |
| चतुर्थी | मात्रे | मातृभ्याम् | मातृभ्यः |
| पञ्चमी | मातुः | मातृभ्याम् | मातृभ्यः |
| षष्ठी | मातुः | मात्रोः | मातॄणाम् |
| सप्तमी | मातरि | मात्रोः | मातृषु |

- माता पितृवत्।
- शसि मातॄः॥
- उणादिनिष्पन्नानां तृन्तृजन्तानां सञ्ज्ञाशब्दानाम् उपधादीर्घश्चेत्तर्हि नप्त्रादीनां सप्तानामेव नान्येषां सञ्ज्ञाशब्दानामिति। मातृशब्देऽपि अप्तृन्...इति सूत्रेण उपधादीर्घो न भवति।

- अनङ्-उपधादीर्घादिकार्यम्
- ऋतो ङिसर्वनाम....- गुणः
- ह्रस्वस्य गुणः- गुणः
- प्रथमयोः पूर्वसवर्णः -पूर्वसवर्णःदीर्घः
- इको यणचि– यण्
- ऋत उत्,रात्सस्य

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ओकारान्तेषु 'द्यो'शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | द्यो+ स्<br>द्य्+ स्= द्यौः | द्यो+ औ<br>द्यौ+ औ, द्य् आव्+ औ= द्यावौ | द्यो/ द्यौ+ अस्<br>द्य् आव्+ अस्= **द्यावः** |
| सम्बोधनम् | हे द्यौः | हे द्यावौ | हे द्यावः |
| द्वितीया | द्यो+ अम्<br>द्या+ म्= **गाम्** | **द्यावौ** | द्यो+ अस्<br>द्या+ स्= **द्याः** |
| तृतीया | द्यो+ आ<br>द्य् अव्+ आ = **द्यवा** | द्योभ्याम् | द्योभिः |
| चतुर्थी | द्यो+ ए<br>द्य् अव्+ ए = **गवे** | द्योभ्याम् | द्योभ्यः |
| पञ्चमी | द्यो+ अस्<br>द्य् ओ+ स् = **द्योः** | द्योभ्याम् | द्योभ्यः |
| षष्ठी | द्यो+ अस्<br>द्य् ओ+ स् = **द्योः** | द्यो+ ओस्<br>द्य् अव्+ ओस् = **द्यवोः** | द्यो+ आम्<br>द्य् अव्+आम्= **द्यवाम्** |
| सप्तमी | द्यो+ इ<br>द्य् अव्+ इ = **द्यवि** | द्यो+ ओस्<br>द्य् अव्+ ओस् = **द्यवोः** | द्योषु |

❖ द्योर्गोवत्॥

- ❖ एचोऽयवायावः- अवादेशः
- ❖ ङसिङसोश्च- पूर्वरूपम्
- ❖ णिद्वद्भाव- प्रयुक्तवृद्धिः
- ❖ आकार-एकादेशः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऐकारान्तेषु रै-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | रै+ स्<br>रा+ स्= **राः** | रै+ औ<br>र् आय्+ औ= **रायौ** | रै+ अस्<br>र् आय्+ अस्= **रायः** |
| सम्बोधनम् | **हे राः** | **हे रायौ** | **हे रायः** |
| द्वितीया | **रायम्** | **रायौ** | **रायः** |
| तृतीया | **राया** | रै+ भ्याम्<br>रा+ भ्याम्= **राभ्याम्** | **राभिः** |
| चतुर्थी | **राये** | **राभ्याम्** | **राभ्यः** |
| पञ्चमी | **रायः** | **राभ्याम्** | **राभ्यः** |
| षष्ठी | **रायः** | **रायोः** | **रायाम्** |
| सप्तमी | **रायि** | **रायोः** | **रासु** |

- राः पुंवत्॥

- रायो हलि- आकारः
- एचोऽयवायावः- आय्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# औकारान्तेषु नौ-शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तस्त्रीलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | नौः | नौ+ औ<br>न् आव्+ औ= नावौ | नावः |
| सम्बोधनम् | हे नौः | हे नावौ | हे नावः |
| द्वितीया | नावम् | नावौ | नावः |
| तृतीया | नावा | नौभ्याम् | नौभिः |
| चतुर्थी | नावे | नौभ्याम् | नौभ्यः |
| पञ्चमी | नावः | नौभ्याम् | नौभ्यः |
| षष्ठी | नावः | नावोः | नावाम् |
| सप्तमी | नावि | नावोः | नौषु |

❖ नौग्लौवत्॥

❖ एचोऽयवायावः- आव्

इत्यजन्तस्त्रीलिङ्गाः।

**१. औङ् इति कस्या विभक्तेः सञ्ज्ञा ?**

क. आम्

ख. टा

ग. ङे

**घ. औ**

**२. आबन्ताङ्गस्य एकारः कुत्र न भवति?**

क. टा

ख. ओस्

ग. सम्बुद्धि(सु)

**घ. ङे**

**३. एषु रूपेषु याडागमः कुत्र अस्ति?**

क. रमायै

ख. रमया

ग. रमयोः

घ. रमाम्

**४. 'रमा-सर्वा' शब्दयोः कुत्र विरूपता?**

क. टा

ख. ओस्

ग. औ

**घ. ङे**

**५. मतिशब्दस्य चतुर्थ्यैकवचने किं रूपद्वयं साधु?**

क. मत्याः मतेः

ख. मतेः, मतये

ग. मत्यै, मतये

घ. मत्याः,मतये

**६. एतेषु मध्ये स्वस्रादिषु सप्तसु नास्ति—**

क. चतसृ

ख. पितृ

ग. मातृ

घ. दुहितृ

**७. क्रोष्ट्री इत्यस्य मूलं प्रातिपदिकं किम्?**

क. क्रोष्टु

ख. क्रोष्टा

ग. क्रोष्टी

घ. क्रोष्टृ

**८. 'द्वि'शब्दस्य स्त्रीलिङ्गे इदं रूपं न भवति—**

क. द्वे

ख. द्वाभ्याम्

ग. द्वयोः

घ. द्वौ

**९. गौरी शब्दस्य इदं रूपं शुद्धं नास्ति—**

क. गौरीः

ख. गौरि

ग. गौरी

घ. गौरिः

**१०. 'स्त्री'शब्दविषये इदं कथनमसमीचीनं वर्तते—**

क. स्त्रीशब्दस्य नदीसञ्ज्ञा भवति।

ख. अस्य अजादौ प्रत्यये परे सर्वत्र इयँङ् भवति।

ग. आम् विभक्तौ तु परत्वान्नुँड् भवति।

घ. अमि शसि विभक्तावपि नित्यम् इयँङ् भवति।

**११. "नेयँङुवँङ्स्थानावस्त्री" इति सूत्रेण किं भवति?**

क. इयँङ्-उवँङौ

ख. ईत्-ऊतौ

ग. नदीसञ्ज्ञानिषेधः

घ. नदीसञ्ज्ञा

**१२. श्रीशब्दस्य सम्बुदौ किं रूपम्?**

क. हे श्रि

ख. हे श्रिः

ग. हे श्री

घ. हे श्रीः

**१३. 'श्री'शब्दस्य इदं युग्मं शुद्धं नास्ति—**

क. ङे— श्रियै,श्रिये

ख. ङि— श्रियि,श्रियाम्

ग. आम्— श्रिणाम्,श्रियाम्

घ. ङस्— श्रियाः,श्रियः

**१४. 'धेनु'शब्दस्य विषये इदमेव सत्यं कथनमस्ति—**

क. अस्य रूपाणि सर्वत्र 'शम्भु'शब्दवद्भवन्ति।

ख. टाविभक्तौ धेन्वा,धेनुना इति रूपद्वयं भवति।

ग. मत्यामिति रूपं षष्ठीविभक्तौ बहुवचने भवति।

घ. धेनुशब्दस्य रूपाणि 'मति'वद्भवन्ति।

**१५. 'क्रोष्ट्रीः' इति रूपं भवति—**

क. द्वितीयायाः बहुवचने

ख. प्रथमायाः बहुवचने

ग. प्रथमाया एकवचने

घ. पञ्चम्या एकवचने

**१६. 'भ्रुवाः, भ्रुवः' इति रूपद्वयं कस्यां विभक्तौ सिद्ध्यति?**

क. प्रथमायाः बहुवचने

ख. पञ्चम्या एकवचने

ग. षष्ठ्या एकवचने

घ. पञ्चम्याः षष्ठ्याश्चैकवचने

**१७. "ऋन्नेभ्यो ङीप्" इत्यनेन 'ङीप्' कुत्र भवति?**

क. गौरी

ख. क्रोष्ट्री

ग. लक्ष्मीः

घ. मतीः

**१८. त्रि-चतुरोः 'तिसृ-चतसृ'आदेशौ कस्मिँल्लिङ्गे भवतः?**

क. पुल्लिँङ्गे

ख. स्त्रीलिङ्गे

ग. नपुंसकलिङ्गे

घ. त्रिषु

**१९. 'तिसृणामि'त्यत्र दीर्घनिषेधः केन सूत्रेण भवति?**

क. अचि र ऋतः

ख. नामि

ग. स्त्रियाः

घ. न तिसृचतसृ

**२०. अधोलिखितेषु सम्बोधनेऽशुद्धं रूपं वर्तते—**

क. रमे

ख. अम्बे

ग. गौरि

घ. श्रीः

**२१. तीयप्रत्ययान्तानां सर्वनामसञ्ज्ञा कुत्र विकल्पेन भवति?**

क. ङिद्विभक्तिषु

ख. अजादिविभक्तिषु

ग. सर्वनामस्थानेषु

घ. हलादिविभक्तिषु

**२२. मतीः इति रूपमस्ति—**

क. सम्बोधनस्य

ख. प्रथमैकवचनस्य

ग. द्वितीयाया बहुवचनस्य

घ. प्रथमाया द्विवचनस्य

**२३. 'रमायाम्' इत्यस्य समीचीना प्रक्रिया अस्ति—**

क. रमा+अम्— 'अमि पूर्वः' इत्यनेन पूर्वरूपैकादेशे सिद्धम्।

ख. रमा+आम्— 'अचिश्नु...' इति इयँङादेशे सिद्धम्।

ग. राम+ङि— 'ङेराम्नद्याम्नीभ्यः' आमि आटि वृद्धौ च कृतायां सिद्धम्।

घ. रमा+ङि— 'ङेराम्नद्याम्नीभ्यः' इत्यामि आडागमे वृद्धौ च कृतायां सिद्धम्।

**२४. "ङिति ह्रस्वश्च" इति सूत्रविषये इदं कथनमसमीचीनम् —**

क. अनेन नदीसञ्ज्ञा विकल्पेन भवति।

ख. स्त्रीशब्दस्यापि नदीसञ्ज्ञा विकल्पेन भवति।

ग. इयँङ्-उवँङ्स्थानिनां नित्यस्त्रीलिङ्गवृत्तीनाम् ईदूदन्तानां स्त्रीशब्दभिन्नानां वा नदीसञ्ज्ञा।

घ. स्त्रीलिङ्गे ह्रस्व-इकारान्त-उकारान्तशब्दानां ङिति विकल्पेन नदीसञ्ज्ञा भवति।

**२५. त्रिशब्दविषये इदं कथनमसङ्गतं वर्तते—**

क. 'तिसृ+अस्' अत्र यणादेशे कृते 'तिस्रः' इति रूपं भवति।

ख. तिसृ+अस् अत्र अचि र ऋतः इत्यनेन रेफादेशे तिस्रः सिद्धं भवति।

ग. तिसृणाम् इति रूपमशुद्धं वर्तते।

घ. त्रिशब्दस्य एक-द्विवचनयोः प्रयोगो न भवति।

---

उत्तराणि— १-घ २- घ ३- क ४- घ ५- ग ६- ख ७- क ८-घ ९- घ १०- घ ११-ग १२- घ १३-ग १४- घ १५-क १६- घ १७- ख १८- ख १९- घ २०-ख २१-क २२- ग २३- ग २४- ख २५-क।